॥ श्रीराहु अष्टोत्तरशतनामस्तोत्रम् ॥

राहु बीज मन्त्र - ॐ भ्राँ भ्रीं भ्रौं सः राहवे नमः ॥

शृणु नामानि राहोश्च सैंहिकेयो विधुन्तुदः ।
सुरशत्रुस्तमश्चैव फणी गार्ग्यायणस्तथा ॥ १॥ फणिर्गार्ग्यायनस्तथा
सुरागुर्नीलजीमूतसङ्काशश्च चतुर्भुजः । सुरारिर्नील
खड्गखेटकधारी च वरदायकहस्तकः ॥ २॥

शूलायुधो मेघवर्णः कृष्णध्वजपताकावान् । वर्णो  पताकवान्
दक्षिणाशामुखरतः तीक्ष्णदंष्ट्रधराय च ॥ ३॥ दंष्ट्राकरालकः
शूर्पाकारासनस्थश्च गोमेदाभरणप्रियः ।
माषप्रियः कश्यपर्षिनन्दनो भुजगेश्वरः ॥ ४॥ काश्यप
उल्कापातयिताशुली निधिपः कृष्णसर्पराट् । उल्कापातजनिः शूली
विषज्वलावृतास्योऽर्धशरीरो जाद्यसम्प्रदः ॥ ५॥ शात्रवप्रदः
रवीन्दुभीकरश्छायास्वरूपी कठिनाङ्गकः ।
द्विषच्चक्रच्छेदकोऽथ करालास्यो भयङ्करः ॥ ६॥

क्रूरकर्मा तमोरूपः श्यामात्मा नीललोहितः ।
किरीटी नीलवसनः शनिसामन्तवर्त्मगः ॥ ७॥

चाण्डालवर्णोऽथाश्व्यर्क्षभवो मेषभवस्तथा ।
शनिवत्फलदः शूरोऽपसव्यगतिरेव च ॥ ८॥

उपरागकरस्सूर्यहिमांषुच्छविहारकः ।
var  उपरागकरस्सोम सूर्यच्छवि विमर्दकः
नीलपुष्पविहारश्च ग्रहश्रेष्ठोऽष्टमग्रहः ॥ ९॥

कबन्धमात्रदेहश्च यातुधानकुलोद्भवः ।
गोविन्दवरपात्रं च देवजातिप्रविष्टकः ॥ १०॥

क्रूरो घोरः शनेर्मित्रं शुक्रमित्रमगोचरः ।
मानेगङ्गास्नानदाता स्वगृहे प्रबलाढ्यकः ॥ ११॥

सद्गृहेऽन्यबलधृच्चतुर्थे मातृनाशकः ।
चन्द्रयुक्ते तु चण्डालजन्मसूचक एव तु ॥ १२॥

जन्मसिंहे राज्यदाता महाकायस्तथैव च ।

जन्मकर्ता विधुरिपु मत्तकोज्ञानदश्च सः ॥ १३॥

जन्मकन्याराज्यदाता जन्महानिद एव च ।
नवमे पितृहन्ता च पञ्चमे शोकदायकः ॥ १४॥

द्यूने कळत्रहन्ता च सप्तमे कलहप्रदः ।
षष्ठे तु वित्तदाता च चतुर्थे वैरदायकः ॥ १५॥

नवमे पापदाता च दशमे शोकदायकः ।
आदौ यशःप्रदाता च अन्ते वैरप्रदायकः ॥ १६॥

कालात्मा गोचराचारो धने चास्य ककुत्प्रदः ।
पञ्चमे धिषणाशृङ्गदः स्वर्भानुर्बली तथा ॥ १७॥

महासौख्यप्रदायी च चन्द्रवैरी च शाश्वतः ।
सुरशत्रुः पापग्रहः शाम्भवः पूज्यकस्तथा ॥ १८॥

पाटीरपूरणश्चाथ पैठीनसकुलोद्भवः ।
दीर्घकृष्णोतनुर्विष्णुनेत्रारिर्देवदानवौ ॥ १९॥

भक्तरक्षो राहुमूर्तिः सर्वाभीष्टफलप्रदः ।
एतद्राहुग्रहस्योक्तं नाम्नामष्टोत्तरं शतम् ॥ २०॥

श्रद्धया यो जपेन्नित्यं मुच्यते सर्व सङ्कटात् ।
सर्वसम्पत्करस्तस्य राहुरिष्टप्रदायकः ॥ २१॥

॥ इति राहु अष्टोत्तरशतनामस्तोत्रम् सम्पूर्णम् ॥